## तृतीयो निर्देशः

कायवाक्चित्तचक्रे तु[1] चतुर्विंशत्युदाहृताः ।
पीठादिभेदमाश्रित्य स्थाने स्थाने व्यवस्थिताः ।। 1 ।।

शिरसस्तु समुद्भूता नाड्यः शिरसिजाः स्मृताः ।
रजःसत्त्वतमोरूपास्तासां मध्ये तु नायिका ।। 2 ।।

पुल्लीरे तु प्रचण्डाख्या नखदन्तवहा स्मृता ।
अजानाडी शिरोदेशे खण्डकपालिना सह ।। 3 ।।

जालन्धरे तु चण्डाक्षी केशरोमवहा तथा ।
हतानाडी शिखादेशे महाकङ्कालिकेन तु ।। 4 ।।

ओडियाने मलानाडी[2] सव्यकर्णे प्रभावती ।
कङ्कालेन सुशोभाङ्गी स्थिता त्वङ्मलधारिणी ।। 5 ।।

अर्बुदे पृष्ठवंशे तु विकटदंष्ट्रिणा वरा ।
[3]पिशितवहा महानासा चत्वारः पीठसंज्ञया ।। 6 ।।

दानपारमिता दुःखज्ञानप्रमुदिता परा ।
गोदावरीश्रुतेर्वामे श्रीसुरावैरिणा सह ।। 7 ।।

रजानाडी स्नायौ( यु )वहा वीरमती सुखावती ।
रामेश्वरे भ्रुवोर्मध्ये खर्वर्यस्थिवहा वरा ।। 8 ।।

---

1. चक्रेषु-व० ति० ।
2. महानाडी-घ. ।
3. पेश्यवहा-क.ख.ग.घ. ।

पटानाडी समाख्याताऽमिताभेन समाकुला ।
वज्रप्रभेण संयुक्ता देवीकोटेऽपि चक्षुषि ।। 9 ।।

लङ्केश्वरी भगानाडी मृद्वीति बुक्कवाहिनी ।
मालवे बाहुमूले तु वज्रदेहेन रञ्जिता ।। 10 ।।

[1]उद्धतानाडी द्रुमच्छाया हृद्वहा तु जिनेश्वरी ।
उपपीठैः( ठे ) समाख्याता डाकिन्यो योगमातरः ।। 11 ।।

विमला चित्तचक्रेण शीलपारमिता परा ।
खेचरी समुदयज्ञानं नीलवज्रावलीवृता ।। 12 ।।

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्ये तृतीयो निर्देशः ।

•

1. छर्वाता-क.ख.ग.घ. गृहीतस्तु पाठः ज्ञानोदयतः ।

## चतुर्थो निर्देशः

चक्षुर्वहा महानाडी अङ्कुरिकेन कामरौ ।
कक्ष ऐरावती ज्ञेया ओड्रे च कुचयुग्मके ।। 1 ।।

पित्तवहा महानाडी महाभैरविका स्मृता ।
वज्रजटिलशोभांगी क्षेत्र एवमुदाहृता ।। 2 ।।

प्रभाकरीति विख्याता निरोधक्षान्तिरेव च ।
नाभौ त्रिशकुनौ चैव वायुवेगा [1]प्रभा स्मृता ।। 3 ।।

महाभैरवयुक्ताङ्गी श्रीमती फुफ्फुसावहा ।
अन्त्रमलावहा घ्राणै( णे ) सुराभक्षीति कौशले ।। 4 ।।

बला( हला )नाडी समाख्याता वज्रहूंकाररञ्जिता ।
उपक्षेत्रे समुद्दिष्टे डाकिन्यौ योगमातरौ ।। 5 ।।

वीर्यपारमिता मार्गज्ञानार्चिष्मत्युदाहृता ।
श्यामादेवी कलिंगे तु वक्त्रे सुभद्रभद्रिता ।। 6 ।।

महानाडीतिविख्याता गुणवर्तिवहा सदा ।
लम्पाके कण्ठदेशे तु सुभद्रा चोदले( रे ) वहा ।। 7 ।।

वज्रप्रभेदेन भद्राङ्गी सौख्यनाडीत्युदाहृता ।
छन्दोहेषु च विख्यातौ( ते ) डाकिन्यौ योगमातरौ ।। 8 ।।

अभिमुखी क्षयज्ञाने ध्यानपारमिता परा ।
काञ्चिपुर्य्यां हृदि स्थाने महाभैरवभूषिणी ।। 9 ।।

---

1. प्रभा शिला-क . ।

हयकर्णा घनानाडी परा पुरीषवाहिनी ।
हिमालये सिता नाडी मेढ्रे सीमान्तवाहिनी ।। 10 ।।

विरूपाक्षेण भूषाङ्गी योगिनीति खगानना ।
उपच्छन्दोह इत्युक्तौ( क्ते ) डाकिन्यौ योगमातरौ ।। 11 ।।

वाक्चक्रेण समुद्भूता भूचर्यो दूतयः स्थिताः[1] ।
प्रज्ञापारमिता त्वनुत्पादज्ञानसुदुर्जया ।। 12 ।।

रक्तपद्मावली च्छन्दोमत्यालोलिकेन च ।
प्रेताधिवासिनी लिङ्गे महाबलेन शोभिता ।। 13 ।।

श्लेष्मवहा वडा( ला )नाडी चक्रवेगा जिनेश्वरी ।
खण्डरोहा गुदस्थाने गृहदेवता संस्थिता ।। 14 ।।

पूयवहा नटीनाडी रत्नवज्रेण संकुला ।
मेलापकेषु विख्यातौ( ते )योगिन्यौ योगमातरौ ।। 15 ।।

धर्मज्ञानोपायपारमिता दूरंगमाऽवनी ।
सौराष्ट्रे शौण्डिनी रक्तवहा स्फुटा शिला स्मृता ।। 16 ।।

योगिनी चोरुयुग्मे तु हयग्रीवानुगामिनी ।
स्वर्णद्वीपे लतानाडी जङ्घास्थे स्वेदवाहिनी ।। 17 ।।

नभोगर्भेण शोभाङ्गी डाकिनी चक्रवर्तिनी ।
उपमेलापके प्रोक्तौ( क्ते ) डाकिनी( न्यौ ) योगमातरौ ।। 18 ।।

अचलाख्याऽद्वये ज्ञानं प्रणिधिज्ञानं योगिनी ।
नगरे च बलानाडी सुवीरा मेदवाहिनी ।। 19 ।।

1. संस्थिताः–क.ग. ।

पादाङ्गुलीष्ववस्था वै श्रीहेरुकसमाकुला ।
सिन्धावश्रुवहा पद्मनृत्येश्वररूपिणी ॥ 20 ॥

पादपृष्ठे शठो( ठा )नाडी श्रीमती श्रीमहाबला ।
श्मशाने संस्थितावेतौ( ते चैते ) डाकिन्यौ योगमातरौ ॥ 21 ॥

बलपारमिता साधुमती संवृतिरेव च ।
मरावङ्गुष्ठदेशे तु वैरोचनविराजिता ॥ 22 ॥

खेटवहा गणानाडी श्रीचक्रवर्तिनीश्वरी ।
कुलूता जानुदेशे तु वज्रसत्त्वोपशोभिता ॥ 23 ॥

समानाडी महावीर्या बालसिंघान( ण )वाहिनी ।
उपश्मशानसंस्थौ( स्थे ) च डाकिन्यौ योगमातरौ ॥ 24 ॥

ज्ञानपारमिता धर्ममेघा प्रथितरूपिणी ।
सितपद्मावलीवृक्षा प्रणवाशनिनां वरा ॥ 25 ॥

कायचक्रे तु डाकिन्यो बाह्या पातालवासिनीः ।
देहमण्डलमेतत्तु पीठाद्या दशभूमयः ॥ 26 ॥

एताः स्वदेहजाः सर्वा भिद्यन्ते स्थानभेदतः ।
सबाह्याभ्यन्तरं स्थातुं बुद्धानां दशभूमयः ॥ 27 ॥

कायवाक्चित्तचक्रे तु चतुर्विंशतिभेदतः ।
स्थानानि सर्वनाडीनां समाख्यातानि सर्वतः ॥ 28 ॥

एषु स्थानेषु डाकिन्यो नाडीरूपेण संस्थिताः ॥ 29 ॥

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्ये चतुर्थो निर्देशः ।

•

## पञ्चमो निर्देशः

काकास्या पूर्वदिग्भागे महानाडी मुखे तथा ।
दक्षिणघ्राणरन्ध्रे तु घोरा नाड्युलूकानना ॥ 1 ॥

गुडे( दे ) त्वग्निवहा नाडी श्वानास्या सिद्धियोगिनी ।
वामनासापुटद्वारे तेज( जि )नीति शिला स्मृता ॥ 2 ॥

शूकरास्या चतुर्दिक्षु एता देव्यो व्यवस्थिताः ।
कृपाणधारिणी नाडी वामकर्णे व्यवस्थिता ॥ 3 ॥

यमदाती( ढी )ति विख्याता सव्यकर्णे व्यवस्थिता ।
यमदूतीति विख्याता चक्रीनाडी सुखावती ॥ 4 ॥

यमदंष्ट्रीति सव्याक्षे शुचि( सूची )मुखी शिला स्मृता ।
कुब्जी( क्षी ) नाडी तु वामाक्षे श्रीयममथनी स्मृता ॥ 5 ॥

चतस्त्रश्च विदिक्ष्वेता योगिन्यो योगमातरः ।
इत्येता वज्रडाकिन्यो नाडीरूपेण संस्थिताः ॥ 6 ॥

चित्तवज्रस्य योगिन्यः सप्तत्रिंशदुदाहृताः ।
प्रज्ञापारमिता ह्येताः शरीरे संव्यवस्थिताः ॥ 7 ॥

सम्पूर्णमण्डलं तेषां भवत्येव न संशयः ।
तदेव मण्डमित्युक्तं वस्तूनां सारमुत्तमम् ॥ 8 ॥

तद् गृह्णाति लातीति शरीरं मण्डलं मतम् ।
सप्तत्रिंशन्महानाडीचक्रं हि मण्डलं [1]महत् ॥ 9 ॥

---

1. मतम्–व० ति० ।

बोधिचित्तं महारत्नं मण्डलं तत्त्वमण्डलम् ।
बाह्याभ्यन्तररूपेण व्याप्य विश्वं व्यवस्थितम् ।। 10 ।।

बाह्यं तु रूपशब्दादि षडिन्द्रियप्रवर्तनम् ।
अभ्यन्तरं तु शुक्ला( क्रा )दि सिद्धद्रव्यं व्यवस्थितम् ।। 11 ।।

सबाह्याभ्यन्तरेणैव बोधिचित्तेन वज्रिणाम् ।
स्थूलसूक्ष्मस्वरूपेण [1]जगद्दिक्षु( व्य ) स्वरूपिणाम् ।। 12 ।।

बुद्धानां बोधिसत्त्वानां समयार्थोदितेन तु ।
जन्मनीहैव बुद्धत्वं प्राप्यते मण्डलादतः ।। 13 ।।

श्रावकाणां च बुद्धानां प्रत्येकानां तथैव च ।
ब्रह्मादीनां च देवानां निष्पत्तिर्मण्डलादतः ।। 14 ।।

एताश्चैव समाख्याता मुदिताद्यास्तु भूमयः ।
आलयो बोधिसत्त्वानामिन्द्रियादिस्वरूपिणाम् ।। 15 ।।

आलयः सर्वबुद्धानां स्कन्धादीनां विशेषतः ।
बुद्धानां बोधिसत्त्वानां बुद्धत्ववाहिकां पराम् ।। 16 ।।

द्वात्रिंशद्बोधिचित्तानां यदा यान्तीव( ह ) पूर्णताम् ।
तदा [2]सम्यक्संबुद्धानां बुद्धत्वं निकटं भवेत् ।। 17 ।।

स्वदेहे चैव बुद्धत्वं स्थितं नान्यत्र कुत्रचित् ।
देहादन्यत्र बुद्धत्वमज्ञानेन वृतैर्मतम् ।। 18 ।।

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्ये पञ्चमो निर्देशः ।

•

1. जगद्बन्धु-व० ति० ।
2. ससुतबुद्धानां-व० ति० ।

## षष्ठो निर्देशः

अथ योगवरं वक्ष्ये नाडीचक्रं यथाक्रमम् ।
द्वासप्ततिसहस्राणि नाडीदेहानुगा भवेत् ।। 1 ।।

नाडी( डि )का उपनाडीनां तेषां स्थाने समाश्रिताः ।
विंशोत्तरशतं नाम नाडीप्राधान्यमुच्यते ।। 2 ।।

नाडीस्थानञ्च पीठञ्च चतुर्विंशत्प्रमाणतः ।
तेषां मध्यस्थिता नाडी ललना मूत्रवाहिनी ।। 3 ।।

दक्षिणे रसनाख्याता नाडी रक्तप्रवाहिनी ।
संवृता मध्यभागेन हृत्सरोरुहमध्यगा ।। 4 ।।

कदलीपुष्पसंकाशा लम्बमाना त्वधोमुखी ।
तैल[1]वह्निशिखादीप्ता बोधिचित्तसमावहा ।। 5 ।।

सावधूतीति विज्ञेया सहजानन्ददायिका ।
चन्द्रसूर्यौ तु विख्यातौ पार्श्वे तु वामदक्षिणे ।। 6 ।।

कण्ठादारभ्य वामेन नाडी संभोगकायिका ।
नाभिमध्ये [ च ] विश्रान्ता अधोमुखी [2]महाबला ।। 7 ।।

नाभेरूर्ध्वं तु या नाडी वहत्यूर्ध्वमुखी तथा ।
कण्ठमध्ये तु विश्रान्ता रक्तवहा प्रकीर्तिता ।। 8 ।।

मदश्चन्द्र इति ख्यातो रक्तः सूर्य इति स्मृतः ।
द्वारद्वयसमारूढावध ऊर्ध्वसमाश्रितौ ।। 9 ।।

---

1. तैले वह्निरिवा–क. ।
2. मदावहा–व० ति० ।

एतौ हि चन्द्रसूर्यौ द्वौ नाडीद्वये प्रकीर्तितौ ।
वीराणां डाकिनीनां तु गत्यागतिनिबन्धनौ ।। 10 ।।

अस्तमनोदयार्थौ तु स्वप्नप्रबोधयोः स्थितौ ।
वामदक्षिणपार्श्वे तु स्वरा द्वादश संस्थिताः ।। 11 ।।

ऊर्ध्वमुखाः[1] समाख्याताः ककारादिभिरावृताः ।
अधोमुखैस्तु पार्श्वस्थैरधिकृत्य नियोजिताः ।। 12 ।।

क्षकाररक्षकः( क्षरकाः ) प्रोक्ता ह्यधोभागे च [2]वै स्थिताः ।
यदा कण्ठे महारागरूपेण चन्द्रमाः स्थितः ।। 13 ।।

सम्भोगस्तु समाख्यातो बुद्धानां कायमुत्तमम् ।
नासाग्रे तु तदा चासौ वज्राग्रे तु यदा स्थितः ।। 14 ।।

अस्तंगतस्तु सम्भोगः कायोऽपि हि यदा भवेत् ।
भगमध्यगतश्चासौ सर्षप इति विश्रुतः ।। 15 ।।

सूर्यरूपः समाख्यातो निर्माणकाय उच्यते ।
बुद्धानां बोधिसत्त्वानां स्फरणं तेन जायते ।। 16 ।।

पद्मनर्तेश्वरो राजा पद्मप्रकाशयोगवान् ।
तस्मिन्नस्तंगते भानौ निर्माणकायरूपके ।। 17 ।।

[3]एतत्संबोधिचित्ताख्यं पिण्डीभूतमनाविलम् ।
संसारमार्गविच्छिन्नं प्रपञ्चोपशमं शिवम् ।। 18 ।।

---

1. मुखी-क. ।
2. वेष्ठितः-व० ति० ।
3. यत्तत्-क.ख.ग. ।

निर्द्वन्द्वं परमं शुद्धं श्रीवज्रसत्त्वस्वरूपकम् ।
स एव प्राणिनां प्राणं( णो ) स एव परमाक्षरः ।। 19 ।।

सर्वव्यापी स एवासौ सर्वदेहे व्यवस्थितः ।
आलिकालिं समां कृत्वा रेखां तत्र नियोजयेत् ।। 20 ।।

संप्रज्वलितोर्ध्वरेखा त्वधः श्र( स्त्र )वति कारिणी ।
स्त्रवते शुक्ल( क्र )रूपेण अमृतबिन्दुरूपिणम् ।। 21 ।।

मन्थमन्थानयोगानां [1]ज्ञानरश्मिरिहकर्ममारुतेन प्रेरिता नाभिमण्डले प्रलीयते, ज्वलति, [2]वह्निभिः समयचक्रगतान्सुगतान् [3]दग्ध्वा दग्धानां तथागतानां सम्भोगचक्रगतमुपायं त्रिप्रदक्षिणीकृत्य ऊर्णाकोशगतेन मर्मोद्घाटनद्वारेण उड्डियानसंज्ञकेन निःसृत्य दशदिग्लोकधातुस्थितानां तथागतानां ज्ञानामृतान् गृहीत्वा शिखारन्ध्रगतेनैकद्वारेण जालन्धरसंज्ञकेन प्रविश्य दन्तसीमान्तर्गतेन रन्ध्रेण सम्भोगचक्रे विश्राम्य दग्धानां तथागतानामानन्दं जनयन्ती नाभिमण्डले स्थिरीभवति। अत्रापि निःक्रमति प्रविशति च ।। 22 ।।

बालाग्रशतसहस्त्रभागतयानन्तरं यथा विचरेत् ।
स्वाधिदैवतयोगेन सर्वमेव प्रकल्पयेत् ।। 23 ।।

अचिन्त्यं चिन्तयेत् सोऽपि चित्तं चैव न लक्षितम् ।
चिन्तयेत् सोऽपि चिन्त्यं वा ततः प्राप्स्यति धारिणीम् ।। 24 ।।

खट्वाङ्गं देवतामूर्त्तिः प्रज्ञा डमरुकाध्वनिः ।
दिनस्तु भगवान् वज्री डाकिनी रात्रिरुच्यते ।। 25 ।।

श्रीहेरुकस्य निर्माणं षष्टमं चित्तनिर्मितम् ।
सद्धर्मस्य च निर्माणं वाराहीत्युपदर्शितम् ।। 26 ।।

---

1. ज्ञानवह्नि-व० ति०. पृ० 87
2. दीप्तिभिः-व० ति० टी०, पृ० 87-88
3. दग्ध्वा-नास्ति मातृकासु, गृहीतस्तु व० ति० ।

श्रीकारमद्वयं ज्ञानं हे इति हेत्वादिवर्जितम्[1] ।
रुकारापगतव्यूहं क इति न क्वचित् स्थितः ।। 27 ।।

चित्तं विश्रम्यते योगी निर्वाणं नैव दर्शितम् ।
च्युतिकाले तु योगीनां श्रीहेरुकादिवीरयोगिनीः ।। 28 ।।

नानापुष्पकरव्यग्रा नानाध्वजपताकिनः ।
नानातूर्यविनिर्घोषैर्नानागीतोपहारताम् ।। 29 ।।

मृत्युर्नामविकल्पोऽयं नीयते खेचरीपदम् ।। 30 ।।

।। इत्यध्यात्ममण्डलभावनानाडीचक्रस्वरूपाख्यानयोगः ।।

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्ये नाडीज्ञानं षष्ठो निर्देशः ।

•

1. शून्यता-यो० सं० ।

## सप्तमो निर्देशः

अथाध्यात्मविधिं वक्ष्ये होमकर्म यथोदितम् ।
अभ्यन्तरैस्तु शुक्ला( क्रा )द्यैर्बाह्यरूपादिभिस्तथा ।। 1।।

हविर्भिः क्रियते होमः प्रज्ञाग्नौ तु महोज्ज्वले ।
षडायतनधातूनां स्कन्धादीनां विशेषतः ।। 2।।

देवतारूपिणां तेषां डाकिनीनां तथैव च ।
योग( गः ) पूजा समाख्याता तेन ते पूजिता यतः ।। 3।।

शिरःकपालमेतत्तु हविर्भाजनमुच्यते ।
श्रुवं तु रसना ख्याता हृच्चन्द्रो ललनात्मकः ।। 4।।

पात्रीति मुखमुद्दिष्टं कुण्डं च नाभिमण्डलम् ।
कर्ममारुतनिर्धूतो ब्रह्माग्निस्त्रि[1] कटिस्थितः ।। 5।।

नादस्तु मन्त्र इत्युक्तं जप आवर्तनं भवेत् ।
भावना प्रतिभाव( स )स्तु मण्डलाद्वययोगतः ।। 6।।

सहजानन्दरूपं तु जिनानां मण्डलादिकम् ।
आचार्यश्चित्तराजस्तु मण्डलाध्यक्षरूपतः ।
सर्वमत्रैव [2]बोद्धव्यं मण्डलादि यथोदितम् ।। 7।।

उक्तं च—

अग्निमुखा हि ते देवा होमतत्त्वे व्यवस्थिताः ।
होमेन देवाः प्रीयन्ते प्रीणनात्सिद्धिं ददन्ति ते ।। 8।।

---

1. त्रिकटे-व० ति० ।
2. मन्त्रद्रव्यमेवमादि-क.ख.ग.घ. ।

विना होमे( मं ) न संसिद्धिः सर्वकर्मसु जायते ।
सर्वमन्त्रप्रसिद्ध्यर्थं होमकर्म समारभेत् ।। ९ ।।

।। इत्यभ्यन्तरहोमयोगः ।।

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्येऽभ्यन्तरहोमयोगो नाम सप्तमो निर्देशः ।



## अष्टमो निर्देशः

पेच्छिअ ए सहित वमुणहि संभावणु मेलु ।
वम्मण कुक्कुरु चण्डालु एकु सहावे खद्दु ।। 1 ।।

स्वागदु धम्मु अणाधुरा अमला विगत ए ।
गाहागाह विवज्जिअ पणमत तत्त अए[1] ।। 2 ।।

[ यश्च ] नाज्ञाकरः शिष्यः स मूढो म्रियते क्षणात् ।
गरैर्द्रा( र्दा )रैर्विषै रोगैर्डाकिन्युपद्रवैस्तथा ।। 3 ।।

विघ्नैर्विनायकैर्घोरैर्मारितो नरकं व्रजेत् ।
तस्मात्सर्वप्रत्यत्नेन गुरुशिष्यकरैः शुभैः ।। 4 ।।

सिद्ध्यते न चिरान्मन्त्री गुरुपर्वक्रमेण च ।
गोपयेच्च सदा तत्त्वमभिधानोत्तरक्रमम् ।। 5 ।।

प्रणिधानवशं दृष्ट्वा हिताय करुणात्मकम् ।
दृष्ट्वा रसायनं यावच्चिन्तयेद् वायुमण्डलम् ।। 6 ।।

यंकाराक्षरसंभूतं धन्वाकारध्वजाङ्कितम् ।
नीलवर्णं च रक्षेतु( त्तु ) धूम्रमालासमाकुलम् ।। 7 ।।

तस्योपरि च रंकारं तेजोमण्डलमुत्तमम् ।
त्रिकोणं रक्तवर्णं तु सूर्यकोटिरिवापरम् ।। 8 ।।

---

1. मूलमातृकायामधस्थः पाठो वर्तते—

काब्रह्मपदपेपेद्दे अस्वेहि अद्धमुमहि सभाहि ब्रह्मपदयेवनमेरु ।
ब्रह्मणकुकुर चण्डालु एकु सभावे खद्दु ।।
स्वार्गद्दुषर्मअनाधुरा अनलाय गत ए ।
भावाभावविवर्ज्जिअ प्रणमहु तत्त्व अयम् ।।

गृहीतपाठस्तु सम्पुटोद्भवतन्त्रस्याप्रकाशितपाण्डुलिपित उद्धृतः ।

तदूर्ध्वं वारुणं चैव वंकारोद्भवमुत्तमम् ।
तुषारसदृशं चैव वर्तुलं रश्मिमा( सा )रिणम् ।। 9 ।।

तदूर्ध्वं पृथिवीबिम्बं चतुःकोणे त्रिसूचिकम् ।
लंजातं चतुरस्त्रं तु पीतरश्म्याकुलाकुलम् ।। 10 ।।

तस्मादूर्ध्वं च संजातं सुमेरुपर्वतोत्तमम् ।
चतुरस्त्रं चतूरत्नमयं शृंगाष्टकैर्युतम् ।। 11 ।।

तस्योपरि समाक्रान्तं भ्रूंकारोद्भवशाश्वतम् ।
तत्परावृत्य तच्चक्रं कूटागारं विभावयेत् ।। 12 ।।

चतुरस्त्रं चतुर्द्वारं चतुस्तोरणभूषितम् ।
हारार्द्धहाररचितं पट्टस्त्रग्दाममण्डितम् ।। 13 ।।

कोणभागेषु सर्वेषु द्वारनिर्यूहसन्धिषु ।
खचितं वज्ररत्नैस्तु सूत्रयेद्वाह्यमण्डलम् ।। 14 ।।

तस्योपरि च हूंकारं विश्ववज्रं विभावयेत् ।
तदूर्ध्वं भावयेत् पद्मं कर्णिकाकेशरान्वितम् ।। 15 ।।

तन्मध्ये भावयेद्योगमालिकालि[ वि ]शुद्धितः ।
तस्य मध्ये तु हूंकारं वज्रसत्त्वस्वरूपकम् ।। 16 ।।

रविमण्डलमध्यस्थं श्रीहेरुकं विभावयेत् ।
द्विभुजमेकवक्त्रं तु त्रिनेत्रं विकृताननम् ।। 17 ।।

भैरवं कालरात्रिं च आलीढाक्रान्तमस्तकम् ।
षण्मुद्राविश्ववज्रं च अर्द्धचन्द्रोपशोभितम् ।। 18 ।।

अथवा कुण्डसंकाशं हूंकारोद्भवशाश्वतम् ।
वज्रघण्टासमापन्नं सहजं संवरं वरम् ।। 19 ।।

एकवक्त्रं त्रिनेत्रं च व्याघ्रचर्मनिवासनम् ।
कपालखट्वाङ्गधरं मुण्डमालाविभूषितम् ।। 20 ।।

वाराह्या तु समाश्लिष्टं वज्रोल्लालनतत्परम् ।
जंघाद्वयं समावेष्ट्य तद्वर्णभुजसंस्थितम् ।। 21 ।।

दिग्वाससं मुक्तकेशं कपालवज्रतर्जनी ।
खण्डमण्डितमेखलं जटामुकुटमण्डितम् ।। 22 ।।

तदग्रे वज्रवाराहीं रक्तवर्णां महोज्ज्वलाम् ।
कर्तिकपालिकां दिव्यां त्रिनेत्रां मुक्तकेशिनीम् ।। 23 ।।

पर्षदि म( मा )ण्डलेयाश्च द्विभुजा एकवक्त्रयोः( काः )।
पञ्चमुद्रासमायुक्तास्त्रिनेत्रा रौद्ररूपिणः ।। 24 ।।

प्रेतासनं [ च ] सर्वेषां भावयेद्भावनोत्तमम् ।
मध्ये हेरुकवज्रं तु नीलवर्णं महासुखम् ।। 25 ।।

पीतवर्णास्तु डाकिन्यो मध्ये पद्मनिभाननाः ।
चित्तचक्रस्य वीराश्च डाकिन्यश्च विशेषतः ।। 26 ।।

कृष्णवर्णो भवेद्वीरो डाकिन्याः सितमेव च ।
वाक्चक्रस्य भवेद् वीरो रक्तवर्णो महोज्ज्वलः ।। 27 ।।

डाकिन्याश्च( नीं च ) शुभां कृष्णां भावयेच्च द्विवर्णिकाम् ।
कायचक्रस्य वीरश्च[1] चन्द्रगौरः सुशोभनः ।। 28 ।।

1. भवेद् वीरो-ख. ।

डाकिन्यस्तत्स्वरूपाश्च इच्छारूपं भविष्यति ।
काकास्याद्या हरिताः सर्वा यमदाढ्याद्याश्च धूम्रजाः ॥ 29 ॥

एवं वर्णविशेषेण भावयेद् ज्ञानमुत्तमम् ।
डाकिन्यः कपालखट्वाङ्गधरा डमरुनृत्यपदे स्थिताः ॥ 30 ॥

मुक्तकेशास्तु सर्वेषां दिग्वाससः सिताननाः ।
चित्तचक्रस्य वीराश्च वज्रघण्टाश्चालिङ्गिताः ॥ 31 ॥

योगिन्यः कपालं वज्रं च तर्जन्या सह एव च ।
वाक्चक्रस्य वीराणां पद्मघण्टाविभूषिताः ॥ 32 ॥

योगिन्यः कपालपद्मानि तर्जन्या सह एव च ।
कायचक्रस्य वीराणां चक्रघण्टाकरोज्ज्वलाः ॥ 33 ॥

योगिन्याश्चक्रं तर्जन्या कपाला मज्जपूरिताः ।
काकास्यादि तु देवीनां खट्वाङ्गकर्तिका तर्जन्या सह ॥ 34 ॥

यमदाढ्यादिदेवीनां डमरुमुण्डतर्जनी ।
कपालमालामकुटा अर्द्धपर्यङ्कनृत्यकाः ॥ 35 ॥

वीराणां पदालीढपदस्था डाकिन्या जानुवेष्टितान् ।
अद्वययोगसमापन्नान् करुणारागसत्सुखान् ॥ 36 ॥

ज्ञानचक्रसमायुक्तानेकलोलीसुखोत्सुकान् ।
धर्मैकरससंभूतान् कायवाक्चित्तमुत्तमान् ॥ 37 ॥

एवं ध्यात्वा जपेद्योगी चतुःसन्ध्यं प्रयत्नतः ।
एतज्ज्ञानं सदा योगी एकाग्रशुद्धमानसः ॥ 38 ॥

जपेत्समययोगेन चतुःसन्ध्यं विधानतः ।
स्फरणाद्रोमकूपाग्रैर्धर्मसम्भोगमेव च ॥ 39 ॥

धर्मचक्रं प्रदर्शित्वा सत्त्वानुग्रहहेतुना ।
अनुत्तरपदे स्थाप्य षड्गतेर्मोचनाय च ॥ 40 ॥

यथायोगरुचेन्मन्त्री कुलपञ्चकमध्यगः ।
त्रिकुलाख्येषु यन्मध्यादत्र वाधिपतित्वकम् ।
सर्वबुद्धसमाजस्य कायवाक्चित्तभेदकम् ॥ 41 ॥

॥ इत्यादिकर्मिकयोगविधिः ॥

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्ये अष्टमो निर्देशः ।

•

## नवमो निर्देशः

अथान्यत्संप्रवक्ष्यामि मण्डलं समयोत्तमम् ।
न तिथिर्न च नक्षत्रं नोपवासो विधीयते ।। 1 ।।

न शुचिर्नाप्यशुचिर्वा न शौचं नोदकक्रिया ।
कालवेलाविनिर्मुक्तः शौचाचारविवर्जितः ।। 2 ।।

स्वतन्त्रमन्त्रयोगज्ञः सर्वसत्त्वार्थतत्परः ।
गिरिगह्वरकुञ्जेषु नदीतीरे सुसंगमे ।। 3 ।।

महोदधितटे रम्ये एकवृक्षे शिवालये ।
मातृगृहे श्मशाने वा उद्याने विविधोत्तमे ।। 4 ।।

विहारचैत्यायतने गृहे वाथ चतुःपथे ।
साधयेत् साधको योगं सर्वकामफलप्रदम् ।। 5 ।।

भूमेरालेपनं कुर्यात् पश्चाद् ज्ञानामृतेन तु ।
क्षान्तिपारमितापुष्पप्रकरं दातव्यं यत्नतः ।। 6 ।।

विश्वमुद्रासने रम्ये विस्तरे सुसमाहितः ।
ध्यानपारमितां लभ्य एकाग्रेण तु चेतसा ।। 7 ।।

चतुर्ब्रह्मविहारेण चतुःसंग्रहणं कुरु ।
कुशलैर्दशभिरालंब्य सर्वसत्त्वहितं दद ।। 8 ।।

बाह्यमाध्यात्मिकं पश्येत् सर्वधर्मशून्यताम् ।
चित्तमात्रं तु वै तिष्ठेद्बोधिसम्भारमुत्तमम् ।। 9 ।।

हृदि धात्वब्जमध्यस्थं भावयेत्सूर्यमण्डलम् ।
तं दृष्ट्वा परमं तत्त्वं पञ्चज्ञानमयं शिवम् ।। 10 ।।

नानारश्मिमयं दिव्यं विस्फुरन्तं समन्ततः ।
पूर्वसिद्धांश्च संचोद्य अधिष्ठानं च कारयेत् ।। 11 ।।

खधातुभवने रम्ये दृष्ट्वा मण्डलमुत्तमम् ।
तिलबिम्बोपमं दृष्ट्वा क्रोधदेवीः समन्ततः ।। 12 ।।

बुद्धांश्च बोधिसत्त्वांश्च बोधिचित्तगुरुं प्रभुम् ।
दृष्ट्वा च नवधा देवीं पूजयेत्पूज्यनायकम् ।। 13 ।।

स्फुरेद्बुद्धौघनिर्माणं क्रोधराजं तु योगिनीम् ।
षड्गतेः सर्वसत्त्वांश्च बुद्धत्वं स्थापयेत्सताम् ।। 14 ।।

दृष्ट्वा प्रतिस्था( ष्ठां ) तत्रैव खधात्वाख्येषु मध्यतः ।
सर्वं त्रिशरणं गच्छेद् यावदाबोधिमण्डलम् ।। 15 ।।

तत्र स्थाप्या वज्रदेव्यः सर्वसत्त्वा भवन्ति च ।
अध्येष्य साधकस्तत्र त्रिशरणं गच्छेन्नित्यशः ।। 16 ।।

पञ्चस्कन्धाद्यहंकारचित्तमुत्पादयेच्छुभम् ।
रूपे वैरोचनो ज्ञेयो वेदना वज्रसूर्ययोः ।। 17 ।।

पद्मनृत्येश्वरं संज्ञा संस्कारे वज्रराजयोः ।
विज्ञाने वज्रसत्त्वं तु व्यापके हेरुकोत्तमः ।। 18 ।।

तेषां बीजाक्षरं ॐ भ्रूँ आं जिं हुँ ह्रींः[1] इति स्मृतम् ।
चक्षुषोर्मोहवज्री स्याच्छ्रोत्रयोर्द्वेषवज्रिणी ।। 19 ।।

---

1. सर्वत्र–हूँ ह्रींः इत्यधिकः पाठः ।

ईर्ष्यावज्रीति घ्राणायां रागवज्री मुखे तथा ।
स्पर्शे मात्सर्यवज्र्यायतनेष्वैश्वर्यवज्रिणी ।। 20 ।।

तासां बीजाक्षरं ऊँ हूं त्रां आँ खँ हाँ इति स्मृतम् ।
पृथिव्यापस्तथा तेजोवायुराकाशमेव च ।
लां मां पां तां खामिति ।। 21 ।।

पातनी मारणी चैवाकर्षणी चैव नर्तनी ।
श्रीपद्मज्वालनी देवी खसमा गगनोपमा ।। 22 ।।

एवं स्कन्धधात्वायतनेषु योगी प्राकृत्य वञ्चनात्। ॐ प्रकृतिपरिशुद्धाः सर्वधर्माः प्रकृतिपरिशुद्धोऽहमिति शुद्धिं कारयेत् ।। 23 ।।

अहं च हेरुको भूत्वा सर्वसत्त्वार्थकारणात् ।
स्थापयामि ततः सर्वान् हेरुकं पदमाप्नुयात् ।। 24 ।।

ॐ स्वभावशुद्धाः सर्वधर्माः स्वभावशुद्धोऽहमित्युच्चारयेत्।

स्थापयेद्गभस्तिमालां वा भवाग्रा दिशो दर्शताम् ।
गभस्तिं तु ततो दृष्ट्वा प्राकारं पञ्जरं तथा ।। 25 ।।

वज्रभूमावधिष्ठं तु वितानं शरजालयोः ।
वज्राग्निज्वालं प्राकारे तद्बाह्ये दूरतो न्यसेत् ।। 26 ।।

ॐ मेदिनी वज्रीभव वज्रबन्ध हूं। ॐ वज्रप्राकार हूं वं हूं । ॐ वज्रपञ्जर हूं पं हूं। ॐ वज्रवितान हूं खं हूं । ॐ वज्रशरजाल त्रां सं त्रां। ॐ वज्रज्वालानलार्क हूं।। 27 ।।

हेरुकज्ञानचक्रं तु ततो दृष्ट्वारं सुप्रभम् ।
सूर्यमण्डलमध्यस्थं वज्रसत्त्वं विभावयेत् ।। 28 ।।

त्रिमुखं षड्भुजं शान्तं शुद्धस्फटिकेन्दुसुप्रभम् ।
महामुद्रासमापन्नं प्रज्ञापर्यन्तसुस्थितम् ।। 29 ।।

कपालमालामकुटमक्षोभ्यकृतशेखरम् ।
सर्वालङ्कारसम्पूर्णं सर्वलक्षणलक्षितम् ।। 30 ।।

द्वात्रिंशल्लक्षणैर्युक्तं व्यञ्जनैः समलङ्कृतम् ।
कपालखट्वाङ्गधरं तद्घण्टावज्रालिङ्गितम् ।। 31 ।।

पाशाङ्कुशधरं वीरं महासुखपदे स्थितम् ।
सितपीतं च हरितमुभयोर्विकृताननम् ।। 32 ।।

क्रोधाष्टकं तत्र स्फार्य अनुलोमविलोमतः ।
वज्रचण्डं च अर्कं च वज्रोष्णीषं तथैव च ।। 33 ।।

कुण्डलीवज्रयक्षं च वज्राकारं महाबलम् ।
श्रीवज्रभीषकं नाम एतान् क्रोधाष्टकान् न्यसेत् ।। 34 ।।

नीलपीतं तथा रक्तं हरितं धूम्रधूसरम् ।
सितकृष्णारुणान् भीमान् दंष्ट्रोत्कटभीषणान् ।। 35 ।।

त्रिमुखान् षड्भुजान् सर्वान्नरास्था( स्थ्या )भरणोज्ज्वलान् ।
आलीढपदमासीनान् विश्वाब्जसूर्यमध्यगान् ।। 36 ।।

अष्टौ च लोकपालांश्च पादाक्रान्तान् विचिन्तयेत् ।
कपालखट्वाङ्गधरान् पाशाङ्कुशधरान् परान् ।। 37 ।।

घण्टाडमरुकान् सर्वान् प्रज्ञालिङ्गितसंमुखान् ।
पिङ्गोर्ध्वकेशविकृतान् सदंष्ट्रोत्कटभीषणान् ।। 38 ।।

व्याघ्रचर्माम्बरधरान् त्रिनेत्रांश्चातिभीषणान् ।
अध ऊर्ध्वगतं वीरं क्रोधद्वयं विभावयेत् ।। 39 ।।

ऊष्णीषवज्रपातालं सितनीलाञ्जनप्रभम् ।
कपालखट्वाङ्गधरं वज्रशूलकरं परम् ।। 40 ।।

पाशाङ्कुशवज्रघण्टामालीढासनसंस्थितम् ।
तत्परावृतमात्मानं वज्रहूंकारं विभावयेत् ।। 41 ।।

क्रुद्धज्वालाकुलं रौद्रं विकटोत्कटभीषणम् ।
सर्वाभरणसुसंच्छन्नमालीढासनसंस्थितम् ।। 42 ।।

अङ्कुशपाशखट्वाङ्गघण्टावज्रकपालयोः ।
मुण्डस्रग्दामदेहोग्रं मुण्डबद्धोग्रशेखरम् ।। 43 ।।

सर्वदुष्टपदाक्रान्तं प्रज्ञापारसमन्वितम् ।
वज्रसत्त्वं तु मकुटं भावयेद् वज्रभैरवम् ।। 44 ।।

कीलकान् वीरक्रोधांश्च स्फरेत्तत्र दिशो दश ।
आज्ञां दत्त्वा तु तत्रैव निर्विघ्नान् कुरुते गुरुः ।। 45 ।।

मन्त्रमेवमनुस्मृत्य चतुर्दिक्षु समन्ततः ।
तर्जन्यङ्गुष्ठतो योज्य च्छोटिका चतुर्दिशि दश ।। 46 ।।

ॐ सुम्भ निसुम्भ हूं हूं फट्। ॐ गृह्ण 2 हूं हूं फट्। ॐ गृह्णापय 2 हूं हूं फट्। ॐ आनय हो भगवन् विद्याराजो हूं हूं फट्। अनेन मन्त्रराजेन सर्वक्रोधानामष्टकीलकं न्यसेत्।। 47 ।।

ॐ घघ घाटय 2 सर्वविघ्नान् हूं फट्। ॐ कीलय 2 सर्वपापान् हूं फट्। हूं 3 वज्रकीलय वज्रधर आज्ञापयति सर्वदुष्टविघ्नानां कायवाक्चित्तवज्रान् कीलय हूं फट्। ॐ वज्रमङ्गलवज्रकीलमाकोटयाकोटय हूँ फट्।। 48 ।।

आकोट्य वज्रकीलेन क्रोधदृष्टिनिरीक्षणात् ।
अनुलोमविलोमेन आकोट्य वज्रसिद्धय( द्ध )धीः ।। 49 ।।

ॐ ख वज्रधृक् वज्रहूंकार हूं फट्। ॐ वज्रेऽण्डवज्रेऽण्डवरे हूं फट्। ॐ वज्रचण्ड वज्र हूं फट्। ॐ वज्रानलार्क वज्र हूं फट्। ॐ वज्र उष्णीष वज्र हूं फट्। ॐ वज्रकुण्डली वज्र हूं फट्। ॐ वज्रयक्ष वज्र हूं फट्। ॐ वज्रकाल वज्र हूं फट्। ॐ वज्रमहाबल वज्र हूं फट्। ॐ वज्र हूं फट्। ॐ वज्रभीषण वज्र हूं फट्। ॐ वज्र उष्णीष वज्र हूं फट्। ॐ वज्रपाताल वज्र हूं फट्।। 50 ।।

एवं सिद्धयत्याज्ञा चैव निर्विघ्नं भवते क्षणात् ।
निर्विघ्नं सकलं दृष्ट्वा यत्र तिष्ठन्ति योगिनः ।। 51 ।।

नग्नो वा यदि वाऽनग्नो भस्माङ्गो मुक्तकेशकः ।
अक्रोधनः शुचिर्दक्षो योगज्ञो योगपारगः ।। 52 ।।

अस्थिमालावलम्बी च खट्वाङ्गकरसंस्थितः ।
आत्मानं हेरुकं कृत्वा हेरुकं च ततः स्मरेत् ।। 53 ।।

एवं भावयेज्जपेच्चक्रं यदि खेदः प्रजायते ।
यं रं वं लं च सुं भ्रूं पं हूं चन्द्रार्कमण्डले ।। 54 ।।

तयोर्मध्ये स्थितं बीजं हूंकारं स्फरणात्मकम् ।
आधाराधेयमारूढं श्रीचक्रसंवरं वरम् ।। 55 ।।

भगवन्तं चतुर्वक्त्रं भयस्यापि भयंकरम् ।
मूलमुखं महाकृष्णं दक्षिणे काञ्चनोपमम् ।। 56 ।।

श्यामं वामेऽरुणं पृष्ठे त्रिनेत्रं रक्तवर्तुलम् ।
शुष्कमुण्डेन्दुसंच्छन्नं जटामकुटमण्डितम् ।। 57 ।।

द्वादशभुजमासक्तं वज्रघण्टासमाश्रितम् ।
सर्वनागाजिनं चैव डमरुकर्तिपर्शुकम् ।। 58 ।।

त्रिशूलं षष्टमं चैव वामे नागाजिनं तथा ।
खट्वाङ्गपात्रपाशं च ब्रह्ममुण्डं च षष्टमे ।। 59 ।।

शतार्द्धमुण्डस्त्रग्दामव्याघ्रचर्माम्बरोत्तमम् ।
शृङ्गारादिरसैर्युक्तं षण्मुद्रादेहभूषितम् ।। 60 ।।

भैरवं कालरात्रिं च आक्रान्तस्तनमस्तकम् ।
आलीढपदमासीनं आत्मानं हेरुकं परम् ।। 61 ।।

वाराहीं रक्तवर्णाङ्गीं मुक्तकेशां दिगम्बराम् ।
त्रिनेत्रामेकवक्त्रां च खण्डमण्डितमेखलाम् ।। 62 ।।

वामे कपालं बिभ्राणां दक्षिणे वज्रकर्तिकाम् ।
जङ्घाद्वयं समावेष्ट्य शृङ्गाररसविह्वलाम् ।। 63 ।।

षण्मुद्रादेहालङ्कारां भगवतीं विभावयेत् ।
डाकिनीं तु तथा लामां खण्डरोहां तु रूपिणीम् ।। 64 ।।

नीलां श्यामां तथा रक्तां पीतां चैव चतुर्थिकाम् ।
वामे कपालखट्वाङ्गं सव्ये डमरुकर्तिकाम् ।। 65 ।।

दंष्ट्राकरालवदनां त्रिनेत्रां मुक्तकेशिनीम् ।
पञ्चमुद्राविभूषाङ्गीमालीढासनसंस्थिताम् ।। 66 ।।

दिग्दलेषु महायोगी भावयेद्योगमातरम् ।
विदिक्षु कलशांश्चैव पञ्चामृतप्रपूरितान् ।। 67 ।।

कपालक्षीरसम्पूर्णान् कलशोपरि संस्थितान् ।
तद्बहिश्चित्तचक्रं वै नीलं वज्रावलीवृतम् ।। 68 ।।

अष्टारं तस्य पूर्वारे खण्डकपालिनं प्रभुम् ।
पुल्लीरमलये चैव प्रचण्डां चण्डविक्रमाम् ।। 69 ।।

जालन्धरे महाकङ्कालं चण्डाक्षीं [ च ] धनाधिपे ।
ओडियाने तु कङ्कालं प्रभावतीं प्रचेतसि ।। 70 ।।

विकटदंष्ट्रिणं याम्ये च महानासां तथार्बुदे ।
गोदावर्यां सुरावैरिणमग्नौ श्रीप्रभावतीम् ।। 71 ।।

रामेश्वरेऽमिताभं चैव खर्वरीं यातुधानके ।
देवीकोटे तथा वायौ वज्रप्रभं लङ्केश्वरीम् ।। 72 ।।

वज्रदेहं द्रुमच्छायामैशान्यां मालवे तथा ।
रक्ताष्टारं च वाक्चक्रं रक्तपद्मावलीवृतम् ।। 73 ।।

पूर्वारे कामरूपेऽङ्कुरिकमैरावतीं तथा ।
श्रीमहाभैरवीमोड्रे वज्रजटिलमुत्तरे ।। 74 ।।

वायुवेगा महाभैरवं पश्चिमे त्रिशकुनौ तथा ।
कोशलायां सुराभक्षिं वज्रहूंकारमस्तके ।। 75 ।।

श्यामादेवीं कलिङ्गे तु सुभद्रं चक्रवर्मणीम् ।
वज्रप्रभं तु लंपाके सुभद्रां यातुधानके ।। 76 ।।

काञ्चीपुर्यां हयकर्णां महाभैरवमाशुगे ।
हिमालये विरूपाक्षं पिनाकिनीं ( नं ) खगाननाम् ।। 77 ।।

कायचक्रं सिताष्टारं सितपद्मावलीवृतम् ।
पूर्वारे प्रेतपुर्यां वै चक्रवेगां महाबलम् ॥ 78 ॥

रत्नवज्रखण्डरोहामुत्तरे गृहदेवता ।
सौराष्ट्रे शौण्डिनीं चैव हयग्रीवं प्रचेतसि ॥ 79 ॥

स्वर्णद्वीपाकाशगर्भं दक्षिणे चक्रवर्मिणी ।
वह्नौ श्रीहेरुकं वीरं सुवीरां नगरे तथा ॥ 80 ॥

पद्मनृत्येश्वरं सिन्धौ यातुधाने महाबलम् ।
कुलतायां महावीर्या वज्रसत्त्वपिनाकिनी ॥ 81 ॥

खण्डकपालिकावीरानेकवक्त्रांश्चतुर्भुजान् ।
वह्निनेत्राञ्जटाजूटान् पञ्चमुद्राविभूषितान् ॥ 82 ॥

वज्रघण्टासमापन्नानालीढासनसंस्थितान् ।
सव्ये डमरुकान् सर्वान् वामे खट्वाङ्गसंकुलान् ॥ 83 ॥

एकवक्त्रा प्रचण्डाद्या वह्निनेत्रा दिगम्बराः ।
वामे कपालखट्वाङ्गौ दक्षिणे वज्रकर्तिका ॥ 84 ॥

पञ्चमुद्राविभूषाङ्गी मुक्तकेशातिरौद्रिणी ।
एवं त्रिचक्रभेदेन भावयेत् साधकः सदा ॥ 85 ॥

काकास्यामुलूकास्यां तु श्वानास्यां शूकराननाम् ।
कृष्णां श्यामां तथा रक्तां पीतां द्वारेषु संस्थिताम् ॥ 86 ॥

कोणेषु यमदाढीं च कृष्णपीतभयानकाम् ।
यमदूतीं पीतरक्तां यमदंष्ट्रीं रक्तश्यामाम् ॥ 87 ॥

श्रीयममथनीं श्यामकृष्णां च विश्वरूपिणीम् ।
एता योगिनीरेकास्याः प्रत्यालीढशवासनाः ।। 88 ।।

चतुर्भुजा महाभीमाः पञ्चमुद्राविभूषिताः ।
वामे कपालखट्वाङ्गौ सव्ये डमरुकर्तिकाम् ।। 89 ।।

(अष्टश्मशानानि)

त्रिनेत्रा रौद्ररूपाश्च मुण्डस्त्रग्दामभूषिणीः ।
चण्डोग्रं गह्वरं चैव ज्वालाकुलं तथैव च ।। 90 ।।

कलं( रं )कभैरवं तत्र पूर्वादिक्रमविन्यसेत् ।
अट्टहासं च रौद्रे च लक्ष्मीवनं हुताशने ।। 91 ।।

घोरान्धकारं महाभीमे नागे किलिकिलारवम् ।
एवं चैत्या महानामा अष्टौ च योगिनीरिति ।। 92 ।।

विरूपाद्यष्टसिद्धानां नागाष्टश्मशानवासिनीः ।
भैरवादींश्च मातृश्च एतेऽष्टश्मशानादयः ।। 93 ।।

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्ये नवमो निर्देशः ।

•

## दशमो निर्देशः

अथापरं प्रवक्ष्येऽहं योगिनीं सांध्यवन्धि( न्दि )नीम् ।
अनुदया च या सन्ध्या काले प्रश्ने विवर्जिता ॥ 1 ॥

संधिनी सर्वभूतानां सा मध्यामिव साधनी ।
हेरुकस्य समापन्नां जपेद्ध्यायेच्च योगिनीम् ॥ 2 ॥

झटित्याकारजां पश्येत् शङ्खकुन्देन्दुवर्णकाम् ।
सर्वालङ्कारसम्पूर्णां सर्वलक्षणसमन्विताम् ॥ 3 ॥

त्रिमुखां षड्भुजां सौम्यां त्रिनेत्रां करुणारसाम् ।
मुक्तकेशां कपालैकं ललाटे चन्द्रशेखरम् ॥ 4 ॥

हेरुकस्य समापन्नां सन्ध्याकालोत्तमोत्तमाम् ।
चतुःसन्ध्यामनुष्ठाय चतुरानन्दनन्दनः ॥ 5 ॥

नाभिहृत्पद्ममध्ये जिह्वामूले शिरोपरि ।
आनन्दं परमं चैव विरमं सहजं तथा ॥ 6 ॥

चतुःषष्टिदलमेकं द्वितीयमष्टदलोत्तमम् ।
तृतीयं षोडशदलं चतुर्थं द्वात्रिंशद्दलम् ॥ 7 ॥

वाराहीं नाभिमूलस्थां सहजं हेरुकोत्तमम् ।
चतुरार्यसत्यतां भाव्य संध्याकालेषु योगिनी ॥ 8 ॥

दुःखं निर्माणचक्रं तु समुदयं धर्मचक्रयोः ।
निरोधं सम्भोगचक्रे मार्गञ्चैव महासुखम् ॥ 9 ॥

एवं संध्यामनुष्ठानं कृतयोगं सुनिश्चितम् ।
सितनीलं हरितं त्रिनेत्रं करुणाशून्यताम् ॥ 10 ॥

त्रिविमोक्षां त्रिकायां च युगपच्छुद्ध्यते क्षणात् ।
वज्रघण्टासमापन्नां कपालखट्वाङ्गधारिणीम् ॥ 11 ॥

मुण्डकर्तिकरधरां पञ्चमुद्राविभूषिताम् ।
सत्त्वपर्यङ्कमासीनां चन्द्रोपेताब्जमध्यगाम् ॥ 12 ॥

मुक्तकेशां च दिग्वासां सुरतातुरविह्वलाम् ।
संध्याकाले सदा ध्यायात् सिद्ध्यन्ते संवरोत्तमाम् ॥ 13 ॥

विड्वज्रोदकरत्लेशामिताभामोघसिद्धिषु ।
एतन्मिश्रं सदा संध्यं वन्दयेद् योगिनीः सदा ॥ 14 ॥

इमं मन्त्रं च सततं गायत्रीं हेरुकोत्तमाम् ॥ 15 ॥

ॐ श्रीहेरुकाय विद्महे विद्याराजाय धीमहि
तन्नो धीरः प्रचोदयात् आः हूं ॥ 16 ॥

तूष्णीं भावेन सततं जपेद्गायत्रीमुत्तमाम् ।
गायत्रीसर्वसिद्धीनां सर्वकर्मकरी सदा ॥
अकालमृत्युप्रशमनी [ सर्वदाऽऽनन्द ]वर्द्धिनी ॥ 17 ॥

भूतान् भविष्यानथ वर्तमानान् कथेच्च मन्त्री सततं सदा समम् ।
इति प्रसिद्धं प्रविशिष्यते यतः सहस्रमेकेन महतीं सिद्धिसाधनीम् ॥ 18 ॥

भावनां साधकेन्द्रस्य विधिं ज्ञात्वा त्रिलोचनम् ।
हेरुकस्य व्रतस्थस्तु दिव्यकायस्तु जायते ॥ 19 ॥

दिव्यश्च श्रीसम्पन्नोऽसौ दिव्यकायं च वा परम् ।
सर्ववाङ्मयवेत्ता तु जरामृत्युविवर्जितः ।। 20 ।।

बुद्धवत्सेव्यते देवैर्बुद्धवत् क्रीडते भुवि ।
मुद्रासार्द्धं चरेद्भूतदिनानि त्रयमेव च ।। 21 ।।

दृष्ट्वा तु भगिनीं साधकः पूजयेच्च त्रिरात्रिकम् ।
ततो वज्री श्रीहेरुको देव्या सार्द्धमागच्छति ।।
तस्य त्र्याचमनं दत्त्वा जानुभिर्धरणीं गतः ।। 22 ।।

प्रणिपत्य ततः कृत्वा[1] पूजयेत्साधकः सदा ।
प्रहृष्टस्तत्क्षणाद्वीरः सर्वज्ञः सर्वकृत् प्रभुः ।। 23 ।।

सर्वत्रैलोक्यचारी च भगवन्तं साधकोत्तमः ।
एष वीरो महावीरः सर्वद्वन्द्वविवर्जितः ।। 24 ।।

येन विज्ञातमात्रेण पृथ्वी सागरमेखला ।
वशमायान्ति ते क्षिप्रं सदेवासुरमानुषाः ।। 25 ।।

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्ये दशमो निर्देशः ।।

।। समाप्तं शुभम् ।।

●

1. कामयेत्-क. ।

# རྩོམ་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས།

## བཅོམ་ལྡན་འདས་ཀྱི་བསྟོད་པ། ༡ - ༤

བསྐལ་པ་བཟང་པོའི་རྟོགས་བརྗོད་ཅེས་པའི་གཞུང་ནང་ལྷ་རྣམས་ཀྱིས་སངས་རྒྱས་བཅོམ་ལྡན་འདས་ལ་བསྟོད་པ་མཛད་པ་རྣམས་བསྟན་ཡོད། དེ་དག་ལས་བསྟོད་པ་ཁག་དྲུག་ནི་གཞན་དུ་པར་བསྐྲུན་ཞུས་ཟིན་འདུག འདིར་བསྟོད་པ་ཁག་གཉིས་པར་སྐྲུན་ཞུས་པ་ལས་སྔ་མ་ལྷ་རྗེ་ཐ་སྐར་གྱི་བུ(ཨཱཪྻཱ ཀུམཱར)དག་གིས་མཛད་པའི་བསྟོད་པ་དང་། བསྟོད་པ་ཕྱི་མ་ནི་སློབ་དཔོན་ནགས་ཀྱི་རིན་ཆེན་གྱིས་མཛད་པའི་མི་གཡོ་བའི་བསྟོད་པ་ཡིན། སློབ་དཔོན་འདི་ནི་ནང་པའི་ངག་གི་རང་བཞིན་གྱི་དཔལ་རྒྱས་པར་བྱེད་པའི་ཆེ་མཐོང་གི་གནས་ཐོབ་པ་ཞིག་ཡིན།

## ཆེས་དཀོན་པའི་དཔེ་དེབ་ཁག་གི་ངོ་སྤྲོད། ༥ - ༡༦

དུས་རབ་འདོན་ཐེངས་འདིའི་ནང་གཞམ་གསལ་རྟོགས་བརྗོད་བསྡུས་པ་ཁག་ལྔའི་ངོ་སྤྲོད་ཞུས་ཡོད།

༡། རྟོགས་བརྗོད་ཕྱོགས་བདུས།

༢། རྟོགས་བརྗོད་ཀྱི་ཕྲེང་བ།

༣། བསྐལ་པ་བཟང་པོའི་རྟོགས་བརྗོད།

༤། རྟོགས་བརྗོད་རིན་ཆེན་ཕྲེང་བ།

༥། ཀླུ་ངན་མེད་ཀྱི་རྟོགས་པ་བརྗོད་པའི་ཕྲེང་བ།

## ནང་པའི་སྒྲུབ་ཐབས་ནང་གི་ཏིང་ངེ་འཛིན། ༡༧ - ༣༤

ནང་པའི་གཞུང་གི་ཁྱད་ཆོས་ལ། དེར་ཡང་དག་པའི་རྟོགས་པ་(ཧླྭཁཥྲཏུཡ) ཏིང་ངེ་འཛིན་རྣམས་ཀྱི་མཚན་མི་འདྲ་བ་ཁག་ཀྱང་བསྟན་ཡོད། གང་གིས་ཏིང་ངེ་འཛིན་གང་བསྒོམས་པ་དང་། དེ་ལས་འབྲས་བུ་གང་ཐོབ་པ་བཅས་གསང་བ་འདུས་པའི་རྒྱུད་ལས་འདིར་དཔེ

མཚོན་གྱི་ཚུལ་དུ་བསྟན་ཡོད། དེ་བཞིན་དུ་གཞུང་གཞན་དང་སྒྲུབ་ཐབས་གཞན་རྣམས་ལས་ཀྱང་རྙེད་ཐུབ།

## ནང་པའི་རྒྱུད་གཞུང་གི་ངོ་སྤྲོད། ༢༥ - ༣༣
## (རྡོ་རྗེ་འཇིགས་བྱེད།)

ནང་པའི་རྒྱུད་གཞུང་གི་ངོ་སྤྲོད་ལས་གཤིན་རྗེ་ནག་པོའི་རྒྱུད་ཀྱི་འགྲེལ་བརྗོད་(ཀླུ༔ ༣༧, ཤོག་གྲངས་ ༣༩-༦༠)ཀྱི་སྐབས་སུ་གཤིན་རྗེ་དང་། གཤིན་རྗེ་གཤེད་དང་། འཇིགས་བྱེད་སྐོར་གྱི་རྒྱུད་ཀྱི་རིམ་པའི་ནང་བསྟན་ཡོད་ཅིང་། དེའི་ནང་གཤིན་རྗེ་དང་གཤིན་རྗེ་གཤེད་དང་འབྲེལ་བའི་གཞུང་གི་ངོ་སྤྲོད་ཞུས་ཟིན་པ་དང་། ད་ལན་རིམ་པ་དེ་དག་ལས་རྡོ་རྗེ་འཇིགས་བྱེད་ཀྱི་རྒྱུད་དང་འབྲེལ་བའི་གཞུང་གི་བསྐྱར་ཞིབ་འདིར་ཞུས་ཡོད།

## བླ་མེད་རྒྱུད་ཀྱི་སྡེ་ཚན་ཕྱེ་བ། ༣༣ - ༣༨

ནང་པའི་རྒྱུད་རྣམས་ཀྱི་དབྱེ་བ་རྣམ་པ་བཞི་ཡོད་པ་ནི་ཐམས་ཅད་ཀྱིས་མཁྱེན་གསལ་རེད། དེ་དག་ལས་བླ་མེད་ཀྱི་རྒྱུད་ལ་ཡང་ཕ་རྒྱུད་དང་མ་རྒྱུད། གཉིས་མེད་ཀྱི་རྒྱུད་བཅས་སུ་དབྱེ་བ་མཛད་ཡོད། བླ་མེད་རྒྱུད་ཀྱི་ནང་གསེས་དབྱེ་བ་འདིའི་སྐོར་ལ་ནང་པའི་རྒྱུད་ཀྱི་རྩ་གཞུང་དང་རྒྱ་གར་གྱི་སློབ་དཔོན་རྣམས་ཀྱིས་མཛད་པའི་གཞུང་རྣམས་སུ་དམིགས་བསལ་གྱི་སྤྲོས་པ་བྱས་པ་ཐོབ་ཀྱི་མེད། བླ་མེད་རྒྱུད་ལ་ནང་གསེས་དབྱེ་བའི་སྐོར་རྒྱས་པར་བོད་ཀྱི་སློབ་དཔོན་རྣམས་ཀྱིས་བསྟན་ཡོད། རྩོམ་སྒྲིག་འདིའི་ནང་བོད་ཀྱི་སློབ་དཔོན་རྣམས་ཀྱིས་མཛད་པའི་གཞུང་རྣམས་ལ་གཞིར་བྱས་ནས་རྒྱུད་འདི་གསུམ་གྱི་མཚན་ཉིད་ཀྱི་འགྲེལ་བརྗོད་ཁ་གསལ་ཞུ་རྒྱུའི་འབད་བརྩོན་བྱས་ཡོད།

## ནང་པའི་རྒྱུད་དུ་སྐྱེ་འགྲོའི་དྲི་མ་མེད་པའི་འོད་གསལ་གྱི་རང་བཞིན་ཁྱད་པར་ཅན་གྱི་རྣལ་འབྱོར། ༣༩ - ༦༣

ང་ཚོའི་ལུས་ལ་ཆེས་ཕྲ་བའི་དྲི་མ་མེད་པའི་འོད་གསལ་གྱི་ཆ་གནས་ཡོད་པ་དེ་ང་ཚོས་རྟོགས་མི་ཐུབ་ཅིང་སྣང་ཡང་མི་ཐུབ། ང་ཚོར་ཤ་དང་རུས་པ། ཐིག་ལེ་དང་ཁྲ་ཁྲག་གི

རང་བཞིན་ཅན་གྱི་ཟག་བཅས་ཀྱི་ལུས་པོ་ན་སྣང་། རྒྱུད་གཞུང་ནང་བཤད་པའི་དྲི་མ་མེད་པའི་འོད་གསལ་རང་བཞིན་གྱི་ལྷའི་སྐུ་དང་ལྷའི་དཀྱིལ་འཁོར་བསྒོམ་པར་བྱེད་པ་དེ་ཉིད་རབ་ཀྱི་མཐར་ཐུག་པའི་གནས་སྐབས་སུ་གཟུགས་སྐུར་འགྱུར་བ་ཡིན། རང་ཉིད་པོ་ནའི་ལུས་ཙམ་དུ་མ་ཟད་དངོས་པོ་ཐམས་ཅད་ཀྱི་ནང་དྲི་མ་མེད་པའི་ཆ་གནས་ཡོད། རྒྱུད་ཀྱི་ལམ་པོ་ན་ལ་བརྟེན་ནས་འགྲོ་བའི་རྒྱུད་ཀྱི་དྲི་མ་མེད་པའི་རང་བཞིན་ཡོངས་སུ་རྟོགས་ཐུབ་པ་ཡིན། ཐུན་མོང་མ་ཡིན་པའི་རྒྱུས་གཟུགས་ཀྱི་སྐུ་སྒྲུབ་པ་ནི་གསང་སྔགས་ཀྱི་ཐེག་པའི་ཐུན་མོང་མ་ཡིན་པའི་ཁྱད་ཆོས་ཡིན། འདིར་མདོར་བསྡུས་ཏེ་རྣལ་འབྱོར་འདིའི་སྐོར་བཀོད་ཡོད།

ཆེས་དཀོན་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ༤༣ - ༦༩

འགོ་བརྗོད་འདིའི་འོག་དྷཱིཿདུས་དེབ་འདོན་ཐེངས་ཉེར་དྲུག་པའི་ནང་གལ་ཆེའི་ཆོས་ཚན་ལག་བྲིས་མ་ང་དྲུག་གི་སྐོར་བཀོད་ཡོད། དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་གསུང་རབ་ལག་བྲིས་མ་གཞན་གོ་བཞིའི་གནས་ཚུལ་བཀོད་ཡོད།

དབང་གི་ཕན་ཡོན། ༧༠ - ༧༤

རྒྱུད་སྡེ་ཚོགས་པ་ལ་མཆོག་དམན་གྱི་ཁྱད་པར་ཡོད་པ་ལྟར་དབང་ལའང་སྡེ་ཚན་གོ་རིམ་ལོགས་སུ་ཕྱེ་ཡོད། བུམ་དབང་གི་ཚོ་ག་ནི་བྱ་རྒྱུད་སོགས་རྒྱུད་བཞི་ཀའི་ནང་གང་འཆམས་ཞིག་ཐོབ་ཀྱི་ཡོད། འོན་ཀྱང་ལྷག་མ་གསང་བའི་དབང་སོགས་ཀྱི་ཚོ་ག་རྣམས་རྣལ་འབྱོར་བླ་མེད་རྒྱུད་པོ་ནའི་སྒོམ་པའི་ཐབས་དང་སྒྲུབ་པ་པོའི་ཆེད་དུ་ཡིན་གྱི། རྣལ་འབྱོར་ལ་སོགས་པ་རྒྱུད་ལྷག་མ་གསུམ་གྱི་སྒྲུབ་པ་པོ་རྣམས་ཀྱི་ཆེད་དུ་མ་ཡིན་ནོ།།

རྩོམ་བྲིས་ཆུང་ངུ་འདིའི་ནང་དབང་གི་རང་བཞིན། དོན། སྡེ་ཚན་དུ་ཕྱེ་བ། དབང་མ་ཐོབ་པར་རྒྱུད་ཉམས་སུ་ལེན་པའི་ཉེས་པ་དང་དབང་གི་ཕན་ཡོན་ཐོག་གསལ་ཁ་ཕུས་ཡོད།

## དབུ་མ་པའི་སྟོང་ཉིད་ཀྱི་ལྟ་བ་དང་ཡོན་ཏན་མེད་པའི་ཚངས་སྨྲའི་དབར་མཚུངས་བསྡུར་དཔྱད་གཏམ། ༧༥ - ༨༦

དབུ་མ་པའི་སྟོང་ཉིད་ཀྱི་ལྟ་བར་ཚིག་དོན་ལྟར་གྱི་སྟོང་པ་སྨྲ་བར་འདོད་པ་དང་། དེ་བཞིན་ཡོན་ཏན་མེད་པའི་ཚངས་པ་སྨྲ་བ་ལའང་སྟོང་པར་སྨྲ་བའི་ཁོངས་སུ་བཅུག་ནས་གྲུབ་མཐའ་འཛིན་པ་འགས་ལྟ་བ་གཉིས་པོ་གཅིག་ཏུ་འདོད་པའི་འབད་བརྩོན་བྱས་ཡོད། འོན་ཀྱང་རྩིམ་བྲིས་པ་འདིས་དབུ་མ་པའི་སྟོང་ཉིད་དང་ཡོན་ཏན་མེད་པའི་ཚངས་པར་སྨྲ་བ་གཉིས་པོ་སོ་སོར་རང་རང་གི་ཆེ་བ་ཡོད་པ་དང་། །དེ་གཉིས་ཀྱི་ཁྱད་ཆོས་རྣམས་མེད་པ་བཟོས་ནས་ལྟ་བ་དེ་གཉིས་པོ་གཅིག་ཏུ་འདོད་པ་ནི་དེ་གཉིས་ཀ་ལ་ཆེས་མི་རིགས་པ་ཡིན། ཨུཔནིཥད་རྣམས་ཀྱི་ཤུགས་རྐྱེན་ལྟ་བ་གཉིས་པོར་དངོས་ཤུགས་གཉིས་ཀའི་སྒོ་ནས་བྱུང་བ་ཡོད་པ་ཙམ་ནི་ཁས་ལེན་རུང་། འོན་ཀྱང་ལྟ་བ་གཉིས་པོ་གཅིག་ཏུ་འདོད་ཐབས་བྱས་པ་འདིས་ང་ཚོའི་གྲུབ་མཐའི་བརྒྱུད་རིམ་ལ་ཕན་པ་ལས་གནོད་ཆེ་བར་བྱེད་པ་ཡིན།

## ཆགས་པ་ཆེན་པོའི་འདོད་ཚུལ། ༨༧ - ༩༩

ནང་པ་སངས་རྒྱས་པ་རྣམས་དེ་ཁོ་ན་ཉིད་ཀྱི་གནས་ལུགས་ལ་ཇི་ལྟ་ཇི་ལྟར་བསམ་པ་རྒྱས་པར་གྱུར་པ་ན་དེ་ལྟ་དེ་ལྟར་དེ་ཉིད་མཆོག་ཏུ་འཕགས་པར་གྱུར། མཆོག་ཏུ་གྱུར་པའི་གནས་སྐབས་ཀྱི་ལྟ་བ་འདི་ནང་པའི་རྒྱུད་ཀྱི་སྒྲུབ་ཐབས་དང་གཞུང་རྣམས་སུ་ཐོབ་ཀྱི་ཡོད། ནང་པའི་ཐེག་པ་ཆེན་པོ་ཡོངས་རྫོགས་ཀྱི་ཐོས་བསམ་གྱི་གཞི་རྟེན་སྙིང་རྗེ་དང་ཤེས་རབ་ཡིན། ཇི་ལྟར་སྙིང་རྗེ་ནི་མངོན་མཐོ་སྒྲུབ་པའི་ཐབས་ཡིན་པ་བཞིན་དེ་ཁོ་ན་ཉིད་རྟོགས་པའི་ཤེས་རབ་ཀྱང་ངེས་ལེགས་ཐོབ་པའི་ཐབས་ཡིན། དེ་གཉིས་ཟུང་དུ་འཇུག་པའི་ཚུལ་ནི་རྡོ་རྗེ་ཐེག་པའི་ཐོས་བསམ་ཉམས་ལེན་གྱི་གནས་མཐར་ཐུག་པ་ཡིན། སྙིང་རྗེ་ཆེན་པོས་འཁོར་བའི་སེམས་ཅན་རྣམས་ཀྱི་སྡུག་བསྔལ་ལ་གཟིགས་ཏེ་དེ་དག་རྡོ་རྗེ་འཆང་གི་གོ་འཕང་ལ་འགོད་པའི་ཟློག་ཏུ་མེད་པའི་འདོད་པ་ཉིད་ནི་ཆགས་པ་ཡིན། ཆགས་པ་འདི་ཐུན་མོང་བའི་ཆགས་པ་ལས་ཁྱད་པར་དུ་འཕགས་པས་དེ་ལ་ཆགས་པ་ཆེན་པོ་ཞེས་བརྗོད་པ་ཡིན། ཆགས་པ་ཆེན་པོའི་རྒྱུ་ཉིད་ཀྱིས་འཇིག་རྟེན་ན་སེམས་ཅན་གྱི་དོན་དུ་ཆགས་པའི་སྤྱོད་པ་བསྟེན་

བཞིན་དུའང་ཆགས་པས་མ་གོས་པར་གནས་པ་ཡིན།  རྒྱུད་གཞུང་རྣམས་སུ་གདན་ལ་ཕབ་པའི་ཆགས་པ་ཆེན་པོ་འདི་ཉིད་ཀྱི་སྐོར་ལ་འདིར་གསལ་བཤད་བྱས་ཡོད།

ཧེ་རུ་ཀ་སོགས་རྡོ་རྗེ་ཕག་མོའི་རྣལ་འབྱོར་མཆོག་གི་རྒྱལ་པོ་
གསང་བ་དམ་པ།  ༦༥ - ༡༣༨

དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་ཧེ་རུ་ཀ་སོགས་རྡོ་རྗེ་ཕག་མོའི་རྣལ་འབྱོར་མཆོག་གི་རྒྱལ་པོ་གསང་བ་དམ་པ་ཞེས་བྱ་བའི་གཞུང་འདི་ཞུས་བསྒྲིགས་བྱས་ཏེ་པར་སྐྲུན་ཞུས་ཡོད།  གཞུང་འདི་རྩ་བའི་མ་དཔེ་ཁག་བཞི་དང་། ཡི་ཤེས་འབྱུང་བ། དཔྱིད་ཀྱི་ཐིག་ལེ་དང་རྣལ་འབྱོར་མ་ཀུན་དུ་སྤྱོད་པའི་རྒྱུད་ཅེས་སོགས་ཀྱི་གཞུང་ལ་གཞི་བཅོལ་བྱས་པ་ཞིག་ཡིན།  དེ་ལྟར་གཞུང་འདིའི་ནང་ཧེ་རུ་ཀ་སོགས་རྒྱུད་གཞུང་མང་པོ་དང་འབྲེལ་བའི་རྣལ་འབྱོར་མཆོག་གི་བསྡུས་པ་ཡིན་པའང་གཞུང་འདིའི་མཚན་བྱང་ཉིད་ལས་རྟོགས་ཐུབ།  པར་བསྐྲུན་མཛད་པའི་གཞུང་འདི་རྩ་རྒྱུད་ཡིན་པ་ནི་མི་མངོན་ལ།  ཧེ་རུ་ཀ་དང་འབྲེལ་བའི་བརྗོད་གཞི་མང་པོ་ཞིག་བཏུས་ཏེ་ངེས་བསྟན་བཅུར་བསྡུས་ཏེ་བསྟན་ཡོད།

## ABSTRACT OF ARTICLES

*Bhagavatstutiḥ* *1-4*

*The Bhadrakalpāvadāna* contains eulogies (*stutis*) by the gods, of the Lord Buddha, of which 6 have been published elsewhere. The stuti by the *Svarvaidya Aświni Kumārs* is being given here. The second *stotra* is the *acala stuti,* the work of Acārya Vanaratna, who played an important role in the enrichment of Buddhist literature.

*Introduction to Rare Texts* *5-16*

In the present issue, the following five *avadāna* collections are introduced :

1. *Avadānasaṁgraha*
2. *Avadānamālā*
3. *Bhadrakalpāvadāna*
4. *Avadānaratnamālā*
5. *Aśokāvadānamālā*

*Samādhi in Buddhist Spiritual Practice* *17-24*

It is a speciality of the Buddhist philosophy that the names of all the various *samādhis* comprehended in its purview are mentioned. Who achieved what kind of samādhi and what the result of that was, is culled and presented here from the *Guhyasamājatantra* as an instance. Similar descriptions can be found in other texts and practices as well.

*Introduction to Buddhist Tantric Literature (Vajrabhairavatantra)* *25-32*

While elucidating the *Kṛṣṇayamāritantra* (*Dhiḥ* 21, pages 29-40) in the context of introducing Buddhist Tantric Literature, tantras of the *Yamāri, Yamāntaka*, and *Bhairava* classes were mentioned; the literature related to *Yamāri* and *Yamāntaka* has already been introduced. Here literature related to the *Vajrabhairavatantra*, of the same class is reviewed.

*Divisions of Anuttaratantra* *33-38*

The fourfold division of Buddhist tantras is widely known. Of these, the *Anuttaratantra* is further subdivided into *Mātṛtantra* (mother-tantra), *Pitṛtantra* (Father-tantra) and *Advayatantra* (non-dual-tantra). This

internal subdivision of the *Anuttaratantra* does not find particular elaboration in the root texts of Buddhist tantra, or in the works of Indian *acāryas*. Tibetan scholars have, however, elaborated in the context of the subdivision of the *Anuttaratantra*. In the present essay, an attempt has been made to present a qualitative review of the three subdivisions on the basis of the writings of Tibetan scholars.

*The Special Yoga of the Divine Untainted Form of the World in Buddhist Tantra* *39-42*

There is an infinitesimal pure untainted divine essence in our body, that we can neither perceive nor understand, for all we perceive is the physical form constituted by flesh and bone. In Tantra, the divine untainted *devakāya* (divine body) and *devamaṇḍala* are meditated upon, and in the ultimate stage transformed into the *rūpakāya* (form body). The divine pure essence is present not only in one's body, but in every substance. This divine pure form of the world can be realised through the path of Tantra alone. The attainment of the special class of *rūpakāya* is a speciality of Tantrayāna. This yoga is presented here in brief.

*Sources of Rare Texts* *43-69*

Under this heading, in the 26th issue of *Dhiḥ*, information was presented about fifty-six handwritten manuscripts. In the present issue, information about another ninety-four handwritten texts is being given.

*The Importance of Initiation* *70-74*

Initiations (*abhiṣeka*) are also classified in accordance with the hierarchy of tantras. The practice of the *kalaśa abhiṣeka* can be found more or less in all four tantras, but other initiations like the *guhyābhiṣeka* are only for the practitioners of *Anuttartantra* and not for the practitioners of the other three tantras. In this brief essay, light is thrown on the nature, meaning and classification of initiations, and the flaws that result in spiritual practice in the absence of initiation.

*Mādhyamika Śunyatā Philosophy and Nirguṇa Brahmavāda : A Comparative Analysis.* *75-86*

Taking the *Mādhyamika Śunyatā* philosophy to mean a literal kind of *śunyatā* (emptiness), and putting *Nirguṇa Brahmavāda* in a similar framework of 'emptiness' some philosophers have tried to compare the two; the author of the present essay believes that each of the two

philosophies is great in its own right. To ignore the particularities of the two, and to consider them identical is to do injustice to both. It may be accepted that both have directly or indirectly been influenced by the Upaniṣads, but to attempt to equate the two can only harm our philosophical tradition.

*The Concept of Mahārāga* *87-94*

As Buddhist metaphysics developed, it gradually reached a very high stage of development. Evidence of the philosophical underpinnings of this high stage of development is to be found in Buddhist philosophy and spiritual practice. The basis of the entire Mahāyāna Buddhist thinking lies in *prajñā* (wisdom) and *karuṇā* (compassion). While *karuṇā* is the means to attain *abhyudaya*, *prajñā* through elemental knowledge is the means to *naiḥśreyas.* The non-duality of the two is a profundity of Vajrayāna thought. *Rāga* is the irrepressible desire, motivated by *mahākaruṇā,* that manifests to free sentient beings and elevate them to the state of *vajradhara*. Being distinct from conventional *rāga* (attachment), it is known as *mahārāga.* It is due to *mahārāga*, that the practitioner working for the wellbeing of sentient beings can, even when manifesting behaviour of attachment, actually remain free of *rāga* (attachment). This *mahārāga*, as described in the tantra, is analysed here.

*Herukādyavajravārāhīyogarājottamaparamarahasya* *95-138*

The text entitled *Herukādyavajravārāhīyogarājottamaparamarahasya* is being presented in this issue after having been edited with the aid of four manuscripts, and also *Jñānodaya, Vasantatilaka, Yoginīsañcāra* etc. As its title indicates, this text is a compendium of excellent *yoga*s connected with *Heruka* and other tantras. The text presented does not seem to be a tantra in its own right; several subjects related to *Heruka* have been collected and placed under ten chapters.

•